समेधितो वर्धितः तैलघृतादिभिर्गृहात् गृहं गच्छतो गलन् पुच्छात्पतन् लङ्कामधाक्षीत् दग्धवान् । '३२६। एकाचो बशो भष्-।८।२।३७।' इत्यादिना भष्भावः, हलन्तलक्षणा वृद्धिः । '३२४। हो ढः ।८।२।३१।' । '२९५। षढोः कः सि ।८।२।४१।' निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन । तदानीं तस्य शत्रुव्यापादनमेव युक्तमिति ॥

९५२—अथा ऽञ्चितोरस्कमुदीर्ण-दृष्टिः
कृत्वा विवक्षा-प्रवणं शरीरम् ॥
विवृत्त-पाणिर् विहतोत्तरा ऽर्थं
विभीषणो ऽभाषत यातुधानान्. ॥ २१ ॥

अथेत्यादि—प्रहस्तादिवचनान्तरं अञ्चितोरस्कं विन्यस्तहारस्थानं । पूजितोरस्कम् । '८८९। उरःप्रभृतिभ्यः कप् ।५।४।१५१।' '३०४७। अञ्चेः पूजायाम् ।७।२।५३।' इतीट् । '४२४। नाञ्चेः पूजायाम् ।६।४।३०।' इत्यनुनासिकलोपप्रतिषेधः । तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवं उत्पाद्येत्यर्थः । उदीर्णदृष्टिस्तदभिमुखदृष्टिः । विवृत्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणो यातुधानानभाषत विहतोत्तरार्थं विहतः प्रतिषिद्धः परैरुदितस्य वचनस्यार्थो यत्र भाषण इति ॥

९५३—'युद्धाय राज्ञा सुभृतैर् भवद्भिः
संभावनायाः सदृशं यदुक्तम्, ॥
तत् प्राण-पण्यैर् वचनीयमेव,
प्रज्ञा तु मन्त्रे ऽधिकृता, न शौर्यम्. ॥ २२ ॥

युद्धायेत्यादि—युद्धार्थं राज्ञा भवन्तः सुभृताः संवर्धिताः तैः सुभृतैर्यदुक्तं 'भावुं पिनषाम' इत्यादि । कीदृशम् । संभावनायाः सदृशम् । तत्प्राणपण्यैर्वचनीयमेव । मन्त्रे तु प्रज्ञाधिकृता न शौर्यम् ॥

'नराभियोगं किं नयसे गुरुत्वम्' इत्यत्रोत्तरमाह—

९५४—यच् चापि यत्ना-ऽऽदृत-मन्त्र-वृत्तिर्
गुरु-त्वमायाति नरा ऽभियोगः ॥
वशीकृतेन्द्रस्य, कृतोत्तरो ऽस्मिन्
विध्वंसिता ऽशेष-पुरो हनूमान्. ॥ २३ ॥

यच्चेत्यादि—वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य नराभियोगो यत्नादृतमन्त्रवृत्तिर्यत्नेनादृता मन्त्रवृत्तिर्यस्य सः तादृशो गुरुत्वमायातीति यच्चाप्युक्तं अस्मिन् वस्तुनि हनूमान् कृतोत्तरो दत्तोत्तरः । यतः विध्वंसिताशेषपुरः । पुरं लङ्का ।

पुःशब्दो वा कृतसमासान्तः । यत्र कपिनाथभृत्येन ईदृशमनुष्ठितं स कथं परामियोगो मद्योन्मुखो न निरूप्यत इति ॥

प्रमादेनाग्निः लङ्कामधाक्षीदित्यत्रोत्तरमाह—

९५५—अग्निः प्रमादेन ददाह लङ्कां
वध्यस्य देहे स्वयमैधितश् चेत्, ॥
विमृश्य तद् देव-धिया ऽभिधत्त
ब्रह्माऽस्त्र-बन्धोऽपि यदि प्रमादः ॥ २४ ॥

अग्निरित्यादि—वध्यस्य वधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं युष्माभिरग्निरेधितो दीपितः लङ्कां ददाह चेत्, तथास्तु । ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः तद्देवधिया देवबुद्ध्या देवानां सात्त्विकत्वान्निर्मला बुद्धिः तया विमृश्य निरूप्याभिधत्त ब्रूत । सोऽपि प्रमाद इति यतोऽसावमोघोऽपि विश्लेषितः । अभिधत्तेति । '२५०१ । दधस्तथोश्च ।८।२।३८।' इत्यभ्यासदकारस्य भष् धातोश्च त्यरि चर्त्वम् ॥

पराभियोगः सर्वथा निरूप्यत इति दर्शयन्नाह—

९५६—जगन्त्यमेयाऽद्भुत-भाव-भाञ्जि,
जिताऽभिमानाश् च जना विचित्राः, ॥
कार्ये तु यत्नं कुरुत प्रकृष्टं,
मा नीति-गर्भान् सु-धियो ऽवमन्ध्वम्. ॥ २५ ॥

जगन्तीत्यादि—असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्या अपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च । अन्यैरुत्कृष्टैर्जीयतेऽभिमानस्तेषाम् । तेनास्मन्यभिमानो न कर्तव्य इति दर्शयति । कार्ये तु प्रकृष्टमुत्तमं यत्नं कुरुत । येन तत्तत्कार्यं सिध्यति । तत्र च ये युक्तिमभिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं गर्भे येषाम् । अत एव सुधियो मावमन्ध्वं मा परिभूत । तद्युक्तानुष्ठानात् । '२६९७। हनः सिच् ।१।२।१४।' इति कित्त्वविधानसामर्थ्यात् अनुनासिकलोपाभावः । '२२४५। धि च ।८।२।२५।' इति सिचो लोपः ॥

यथा च विजिगीषुणा वर्तितव्यं तथोपदिशन्नाह—

९५७—वृद्धि-क्षय-स्थान-गतामजस्रं
वृत्तिं जिगीषुः प्रसमीक्षमाणः ॥
घटेत सन्ध्याऽऽदिषु यो गुणेषु,
लक्ष्मीर् न तं मुञ्चति चञ्चला ऽपि. ॥ २६ ॥

वृद्धीत्यादि—आत्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषुः तस्य च वृद्धिक्षयस्थानमिति त्रीणि फलानि । गुणाश्च सन्धिविग्रहयानासनसंश्रयद्वैधी-भावाः षट् । तत्र यस्मिन् गुणे स्थितः पश्येदिहस्थः पश्यामीति । दुर्गसेतुवणि-कृषिशून्यनिवेशनद्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्तयितुं परस्य चैतानि हन्तुं गुणमातिष्ठेत् सा वृद्धिः । यस्मिन् गुणे स्थितः स्वकर्मणामुपघातं पश्येत् नेतरस्य तस्मिन्न तिष्ठेत् स क्षयः । स्वकर्मणां वृद्धिगुणेनाभिपश्येदेतत् स्थानमित्यनेन मार्गेण यो विजिगीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रसमीक्षमाणो निरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति । गुणसङ्कुलाबद्धत्वात् ॥

अस्ति स कालो यत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शयन्नाह—

९५८—उपेक्षणीयैव परस्य वृद्धिः

प्रनष्ट-नीतेरजितेन्द्रियस्य ॥

मदा॒ऽऽदि-युक्तस्य विराग-हेतुः,

स-मूल-घातं विनिहन्ति या ऽन्ते. ॥ २७ ॥

उपेत्यादि—परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न मदादिषड्वर्गं त्यजति, किंतु तेनैव युज्यते । तस्यैवंविधस्य या वृद्धिः सा सर्वस्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न तदभावाय । तेनेदृशी या अन्ते अवसाने समूल-घातं सर्वं सर्वेण विनिहन्ति विनाशयति ॥

तथास्ति स कालो यत्र विजिगीषुणाप्यात्मक्षय उपेक्षणीय इत्याह—

९५९—जना॒ऽनुरागेण युतो ऽवसादः

फला॒ऽनुबन्धः सुधिया ऽऽत्मनो ऽपि ॥

उपेक्षणीयो ऽभ्युपगम्य संधिं

कामा॒ऽऽदि-षड्-वर्ग-जिता ऽधिपेन. ॥ २८ ॥

जनेत्यादि—आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः संबद्धः अनु-रक्तप्रकृतिमण्डलत्वाद्विजिगीषोः फलानुबन्धः फलमनुबध्नाति । सुधिया विदुषा अधिपेन राज्ञा । कामादिषड्वर्गजिता कामक्रोधलोभमोहमदेर्ष्याणां षण्णां वर्गः तज्जिता उपेक्षणीयः । तत्रापि परैः संधिमभ्युपगम्य कृत्वा । अन्यथा क्षीणोऽ-यमिति परोऽभियुञ्जीत ॥

यदा च विजिगीषुः संधिविग्रहाभ्यां फलं न पश्येत् तदा स्ववृद्धिमाश्रयेदा-सनं कुर्यादित्युपदिशन्नाह—

९६०—यदा विगृह्णन् न च संदधानो

वृद्धिं क्षयं वा ऽनुगुणं प्रपश्येत्, ॥

आसीत राजा ऽवसर-प्रतीक्षस्
तदा प्रयासं वितथं न कुर्यात्. ॥ २९ ॥

यदेत्यादि—यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयं वा परस्यात्मनोऽनुगुणं न पश्येत्। संदधान इति संधिं च कुर्वन्नात्मनोऽनुगुणं न पश्येत् तदा आसीत स्वयुद्धार्थमासनं कुर्यात् न विग्रहं संधिं वा। अवसरः कालस्तं प्रतीक्षत इति अवसरप्रतीक्षः। '२९१३। कर्मण्यण् ।३।२।१।' संधेर्विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाण इत्यर्थः। न पुनः प्रयासं संधिविग्रहोद्यमं वितथं निष्फलं निष्प्रयोजनं कुर्यात्। यदा तु परं विग्रहीतुमशक्तः तदा श्वावराहकलहं समागमुपदेक्ष्यति ॥

संधिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुपदिशन्नाह—

९६१—संधौ स्थितो वा जनयेत् स्व-वृद्धिं
हन्यात् परं वोपनिषत्प्रयोगैः ॥
आश्रावयेदस्य जनं परैर् वा
विग्राह्य कुर्यादवहीन-संधिम्. ॥ ३० ॥

संधावित्यादि—संधौ स्थितो वर्तमानः जनयेत् स्ववृद्धिम्। यथा अत्युच्छ्रितः तामभियुञ्जीत परं वा शत्रुं उपनिषत्प्रयोगैः विषादिदानैः हन्यात् विनाशयेत् संधिना जातविश्वासत्वात्। आश्रावयेदस्य जनं देशादिदानेनाकर्षयेत्। *बलवता अभियुज्यमानः परैः विग्राह्य कलहं कारयित्वा अवहीनसंधिं आक्रान्त*-संधिं कुर्यात्। तस्योपतापितत्वात् ॥

संधिस्थोर्विजिगीषोः शत्रुमण्डलभेदं कुर्वतः सुकरः संधिरित्युपदिशन्नाह—

९६२—संदर्शित-स्नेह-गुणः स्व-शत्रून्
विद्वेषयन् मण्डलमस्य भिन्द्यात् ॥
इत्येवमादि प्रविधाय संधिर्
वृद्धेर् विधेयो ऽधिगमाभ्युपायः. ॥ ३१ ॥

संदर्शितेत्यादि—अयमस्मत्प्रभवोऽनेन संधानं मा कार्षुरिति तान्विद्वेषयन् विमुखानुत्पादयन्। दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः। अस्य शत्रोर्मण्डलममात्यादिप्रकृतिं भिन्द्यात् इत्येवमादि प्रविधाय संदर्शितेत्येवमादिवाक्यार्थं कृत्वेत्यर्थः। वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुः संधिर्विधेयोऽनुष्ठेयः ॥

विग्रहोऽपि विशिष्टस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिशन्नाह—

९६३—मत्वा सहिष्णूनपरोपजप्यान्
स्वकानधिष्ठाय जला॒ऽन्त-दुर्गान् ॥
द्रुमा॒ऽद्रि-दुर्लङ्घ्य-जला॒प्रधृष्यान्
वर्धेत राजा रिपु-विग्रहेण. ॥ ३२ ॥

मत्वेत्यादि—स्वकानात्मीयाननुजीविनः सहिष्णून् समर्थान् अपरोपजप्यान् पररभेद्यान् जलान्ते ये दुर्गाः प्रदेशाः तानधिष्ठाय तत्र स्थापयित्वा। '५४२। अधिशीङ्—।१।४।४६।' इति कर्मसंज्ञा । कीदृशान्। द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्चाप्रधृष्यान् अगम्यान्। वनपर्वतजलभेदात् त्रिविधं दुर्गम्। रिपुणा सह यो विग्रहः तेन हेतुना राजा वर्धेत वृद्ध्युपचित. स्यात् ॥

यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषोरासनमुपदिशन्नाह—

९६४—शक्नोति यो न द्विषतो ऽभिहन्तुं,
विहन्यते ना ऽप्य-बलैर् द्विषद्भिः, ॥
स श्वा॒-वराहं कलहं विदध्या-
दासीत दुर्गा॒ऽऽदि विवर्धयंश्॒ च. ॥ ३३ ॥

शक्नोतीत्यादि—यो विजिगीषुः अबलत्वात् द्विषतः शत्रूनभिहन्तुं विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यते स विजिगीषुः श्ववराहं कलहं विदध्यात् अनुतिष्ठेत् । श्वा च वराहश्च श्ववराहं तदीयमिव कलहम् । '१५००। तस्येदम् ।४।३।१२०।' इत्यण्। यथा चाण्डाला वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति यद्ययं हतोऽनेन वा अयमिति तयोर्भक्ष्यत्वादुभयथा कार्यसिद्धिः। तद्वद्द्वयोर्द्विषतो. कलह विदध्यात् । स्वयं च दुर्गादि विवर्धयन् दुर्गसेतुवणिक्पथिशून्यनिवेशनद्रव्यहस्तिवनकर्माण्युपचिन्वन् आसीत तिष्ठेत ॥

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं पश्येत् तदा यायात् संश्रयेतेति गुणद्वयमुपदिशन्नाह—

९६५—प्रयाण-मात्रेण परे प्रसाध्ये
वर्तेत यानेन कृता॒ऽभिरक्षः, ॥
अ-शक्नुवन् कर्तुमरेर् विघातं
स्व-कर्म-रक्षां च परं श्रयेत. ॥ ३४ ॥

प्रयाणमात्रेणेत्यादि—प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षेत, यानेन वर्तेत, स्ववृत्तौ वर्तेत। कृताभिरक्षः अभियास्यतः कर्मणां द्विविधत्वप्रतिविधानात् । अरेर्विघात दुर्गादिकर्मोपघातान् स्वकर्मरक्षां स्वेषां दुर्गा-

द्विकर्मणां अपरेणोपहन्यमानानां रक्षां कर्तुमशक्नुवन् शक्तिहीनत्वात् परं श्रयेत । यमाश्रित्य क्षयस्थानात् स्थानवृद्धिमाप्नुयात् । परो द्विविधः अभियोक्ता तद्विशिष्टबलोऽपरोऽन्य इति ॥

यदा तु सहायसाध्यं कार्यं पश्येत् तदा संधिविग्रहासनद्वैधीभावं गच्छेदित्युपदिशन्नाह—

९६६—एकेन संधिः, कलहो ऽपरेण
कार्यो ऽभितो वा प्रसमीक्ष्य वृद्धिम्, ॥
एवं प्रयुञ्जीत जिगीषुरेता
नीतीर् विजानन्नहिताऽऽत्म-सारम्. ॥ ३५ ॥

एकेनेत्यादि—अभित उभयपार्श्वयोः संधिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन संधिः अपरेण सहायाभियुक्तेन विग्रहः कार्यः । एवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एता नीतीः षाड्गुण्यलक्षणाः प्रयुञ्जीत ॥

त्वया पुनरेवं न प्रयुक्ता इति दर्शयन्नाह—

९६७—त्वया तु लोके जनितो विरागः,
प्रकोपितं मण्डलमिन्द्र-मुख्यम्, ॥
रामे तु राजन्, विपरीतमेतत्
पश्यामि, तेना ऽभ्यधिकं विपक्षम्. ॥ ३६ ॥

त्वयेत्यादि—त्वया पुनश्चतुर्वर्णोच्छेदकारिणा लोके जनितो विरागः । इन्द्रमुख्यं शक्रप्रधानं च मण्डलं प्रकोपितम् । रामे तु सर्वमेतद्विपरीतं अनुरागेण जनितं मण्डलं चानुरञ्जितं तेनाभ्यधिकं विपक्षं रामं पश्यामि ॥

न चेदानीं भवतः कार्यं विनष्टं अपि तु प्रागेवेति दर्शयन्नाह—

९६८—एकेन वाली निहतः शरेण
सुहृत्-तमस् ते, रचितश् च राजा ॥
यदैव सुग्रीव-कपिः परेण,
तदैव कार्यं भवतो विनष्टम्. ॥ ३७ ॥

एकेनेत्यादि—तव सुहृत्तमो वाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः, सुग्रीवश्च कपिस्त्वच्छत्रू राजा रचितः स्थापितः तदैव भवतः कार्यं विनष्टमिति ॥

अथ प्रतापवतो मम कथं कार्यं विनश्यति प्रतापादेव शत्रवो नश्यन्तीति चेदाह—

९६९—प्राकार-मात्राऽऽवरणः प्रभावः
खराऽऽदिभिर् यो निहतैस् तवाऽभूत्, ॥
लङ्का-प्रदाहाऽक्ष-वध-द्रु-भङ्गैः
क्लाम्यत्यसावप्यधुना ऽतिमात्रम्. ॥ ३८ ॥

प्राकारेत्यादि—तव त्रैलोक्यप्रमाथी प्रताप आसीत्। पुनः खरादिभिर्निहतैः प्राकारमात्रावरणो जातः। लङ्कायामेव समर्थत्वात्। असावप्यधुना लङ्कादाहेन, अक्षवधेन, द्रुमभङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपगच्छति ॥

अतो रामेण सह युद्धं न घटते तदेव दर्शयन्नाह—

९७०—षड्वर्ग-वश्यः परिमूढ-बन्धु-
रुच्छिन्न-मित्रो ऽरिगणैरुपेतः ॥
मा पाद-युद्धं द्वि-रदेन कार्षीर्
नम क्षितीन्द्रं प्रणतोपभोग्यम्. ॥ ३९ ॥

षड्वर्गेत्यादि—वशंगतो वश्यः कामादेर्वश्यः। परिमूढबन्धुः मूर्खामात्यादिपरिवारः। उच्छिन्नमित्रः वर्गस्यासंभवात्। अरिगणैरुपेतः। तद्विपरीतो रामः। अतो द्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं कार्षीः। अपितु क्षितीन्द्रं रामं नम। प्रणतोपभोग्यम्। अनेन हीनसंधिमाह। तथा चोक्तम्—'प्रवृत्तं मण्डिणाक्रान्तो राजा बलवता बलः॥ संधिनोपनमेत्तूर्णं दण्डकोशात्मभूमिभिः॥' इति ॥

युवयोः संधानकारणमस्त्येवेति दर्शयन्नाह—

९७१—रामो ऽपि दाराऽऽहरणेन तप्तो,
वयं हतैर् बन्धुभिरात्म-तुल्यैः, ॥
तप्तस्य तप्तेन यथा ऽऽयसो नः
संधिः परेणा ऽस्तु, विमुञ्च सीताम्. ॥ ४० ॥

राम इत्यादि—यथा तप्तेनायसा तप्तस्यायसः संधिर्घटते तद्वदस्माकं तप्तानां तप्तेन रामेण संधिरस्तु। अतो विमुञ्च सीतां संधिनिमित्तम् ॥

यदि च तेन तप्तेनापि सता ज्यायसा न संधानं तदा सर्वे वयं न जीवामः तव तेजसो विनाशकत्वादिति दर्शयन्नाह—

९७२—संधुक्षितं मण्डल-चण्ड-वातै-
रमर्ष-तीक्ष्णं क्षिति-पाल-तेजः ॥

सामाऽम्भसा शान्तिमुपैतु राजन्!
प्रसीद, जीवाम स-बन्धु-भृत्याः. ॥ ४१ ॥

संधुक्षितमित्यादि—क्षितिपालतेजः सीतावियोगजम्। इन्द्राविमण्डले-अण्डवातैरिव संधुक्षितं दीपितम्। अमर्षनीक्ष्णं असहिष्णुतयासह्यम्। सामाऽम्भसा साम्ना संधिना अम्भसेव शान्तिमुपैतु। हे राजन्! प्रसीद किं संरम्भेण? अन्यथा तमारण्योऽग्निरिव दुःस्वामर्षजं तेजो विक्रमयतीति ॥

समानयोरपि संधानमेव युज्यते न विग्रहः किं पुनर्ज्यायसीत्यत्र हेतुं दर्शयन्नाह—

९७३—अ-पक्क-कुम्भाविव भङ्ग-भाजौ
राजश्रियातां मरणं समानौ, ॥
वीर्ये स्थितः किंतु कृताऽनुरागो
रामो भवांश्च चोत्तम-भूरि-वैरी. ॥ ४२ ॥

अपक्केत्यादि—हे राजन्! यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः। तद्वत् समानौ युध्यमानौ मरणमियातानाम्। सार्वधातुकयकारस्थादिणो न दीर्घत्वम्। राजश्रियातामिति '१३४। ङमो ह्रस्वादचि ङमुट्-।८।३।३२।' किंतु रामो वीर्ये स्थितः। उत्साहशक्तियुक्त इत्यर्थः। विक्रमबलं चोत्साहशक्तिः। कृतानुरागश्च अनुरक्तमण्डलवान्। भवान् पुनः उत्तमभूरिवैरी। उत्तमा इन्द्रादयो भूरयः प्रभूता वैरिणः शत्रवो यस्य। अतस्तेन संधानमेव युक्तं न विग्रहः। ननु च समज्याययोर्ज्या संधीयेन हीनेनैव विगृह्णीयात्। मन्त्रप्रभावोत्साहशक्तिभिर्युक्तो ज्यायान्। अपचितो हीनः। तुल्यशक्तिः समः। तत्र ज्ञानबलं मन्त्रशक्तिः। कोशदण्डबलं प्रभुशक्तिः। विक्रमबलं उत्साहशक्तिः ॥

मन्त्रोत्साहशक्त्योः शेषयोरभावाच्च हीनेन विग्रह एव युज्यत इत्याह—

९७४—दण्डेन कोशेन च मन्यसे चेत्
प्रकृष्टमात्मानमरेस् तथापि ॥
रिक्तस्य पूर्णेन वृथा विनाशः
पूर्णस्य भङ्गे बहु हीयते तु. ॥ ४३ ॥

दण्डेनेत्यादि—दण्डेन चतुरङ्गेन बलेन, कोशेन हेमरूप्यादिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे, तथाप्येवमपि न युक्तः, यतो रिक्तस्य पूर्णेन सबला विनाशो भङ्गः वृथा निष्फलः। पूर्णस्य पुनर्भवतो भङ्गे बहु हीयत इति हीनेन बलवतोऽपि संधानं युक्तम्। रिक्तस्य भङ्गो माऽभूत् ॥

अभ्युद्विजयफलमस्तीति चेदाह—

९७५—क्लिष्टाऽऽत्म-भृत्यः परिमृग्य-सम्पन्
मानी यतेता ऽपि स-संशये ऽर्थे, ॥
संदेहमारोहति यः कृताऽर्थो,
नूनं रतिं तस्य करोति न श्रीः. ॥ ४४ ॥

क्लिष्टेत्यादि—यो मानी क्लिष्टात्मभृत्यः चिरकालक्लिष्टशरीरः क्लिष्टभृत्यश्च। परिमृग्यसम्पत् प्रार्थनीया विभूतिर्येन। मृगयतेः स्वार्थिकण्यन्ताद्यो यत्। संशयेऽर्थे स्यान्न स्यादिति यतेतापि यत्न कुर्यात्। यः कृतार्थो भवादृशः त्रैलोक्यविजयित्वात् संदेहमारोहति संदेहे प्रवर्तते, तस्य नूनमवश्यं श्रीर्विभूतिः रतिं स्थितिं न करोति॥

कदा तर्हि विग्रह इत्याह—

९७६—शक्यान्य-दोषाणि महा-फलानि
समारभेतोपनयन् समाप्तिम् ॥
कर्माणि राजा विहिताऽनुरागो,
विपर्यये स्याद् वितथः प्रयासः. ॥ ४५ ॥

शक्यानीत्यादि—शक्यानि यानि कर्तुं पार्यन्ते। अदोषाणि शुद्धानि महाफलानि कार्याणि राजा समारभेत विग्रहेणेत्यर्थात्। उपनयन् समाप्तिं नयन्। विहितानुरागोऽनुरक्तप्रकृतिः। विपर्यये उक्तस्य। अशक्यानि दोषाधिकानि स्वल्पफलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः निष्फलो विग्रहः॥

ममापि रामविग्रहेण सर्वमस्तीति चेदाह—

९७७—जेतुं न शक्यो नृ-पतिः सु-नीतिर्
दोषः क्षयाऽऽदिः कलहे ध्रुवश्, च ॥
फलं न किंचिन् न शुभा समाप्तिः,
कृताऽनुरागं भुवि संत्यजा ऽरिम्. ॥ ४६ ॥

जेतुमित्यादि—नृपती रामः जेतुं न शक्यः विग्रहेण। उत्साहशक्तियुक्तत्वात्। तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यंभावी। विग्रहे वा सति क्षयव्ययप्रयासप्रत्यवाया भवन्तीत्युक्तम्। फलं न किंचित्। न शुभा समाप्तिः स्वबन्धुविनाशहेतुत्वात्। अतो योद्धुमरिं ज्यायांसं संत्यज। भुवि कृतानुरागं त्वं पुनरकृतानुराग इति॥

अन्यच्च वालिवध एव तस्यार्थसम्पत्प्रभावेति दर्शयन्नाह—

९७८—त्वन्-मित्र-नाशो, निज-मित्र-लाभः,
समेत-सैन्यः स च मित्र-कृच्छ्रे ॥
भोग्यो वशः पश्य शरेण शत्रोः
प्रसाधितो वालि-वधे न को ऽर्थः ॥ ४७ ॥

त्वन्मित्रेत्यादि— वालिवधे सति शरेण रामस्य कोऽर्थो न प्रसाधितः, अपि तु सर्व एव पश्य। तथाहि। त्वन्मित्रनाशः तस्य च मित्रलाभः मित्रं च तल्लाभश्चेति। समेतसैन्यः कृच्छ्रे संकटप्राप्तौ भूतभोग्यः उपजीव्यः। वशोऽनुकूल इति ॥

तं विभिद्य साधयिष्यामीति चेदाह—

९७९—लोभाद् भयाद् वा ऽभिगतः कपीन्द्रो
न राघवं, येन भवेद् विभेद्यः, ॥
स्थितः सतां वर्त्मनि लब्ध-राज्यः
प्रति-प्रियं सो ऽभ्यगमच् चिकीर्षुः. ॥ ४८ ॥

लोभादित्यादि—क्रुद्धलुब्धभीतावमानिताश्चत्वारो भृत्याः परस्य भेद्याः। तत्र कपीन्द्रो राघवं लोभाद्भयाद्वा श्रामाद्वा नाभिगतः। येन हेतुनाऽयं विभेद्यः स्यात्। यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्यो लाभरतः प्रतिप्रियं चिकीर्षुः ॥

तदनुजीविनोऽपि न भेद्या इति दर्शयति—

९८०—फलाशिनो निर्झर-कुञ्ज-भाजो
दिव्याऽङ्गनाऽनङ्गरसाऽनभिज्ञाः ॥
न्यग्-जातयो रत्न-वरैरलभ्या
मुख्याः कपीनामपि नोपजप्याः. ॥ ४९ ॥

फलाशिन इत्यादि—कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजपितुं शक्याः। यतः फलाशिनो मिष्टान्ननिरपेक्षाः। निर्झरकुञ्जभाजः न रम्यप्रासादवासिनः। दिव्याङ्गनानङ्गरसानभिज्ञाः दिव्याङ्गनानां योऽनङ्गरसः सुरतरसः तदनभिज्ञाः। न्यग्जातयः न्यङ्क्वन्तीति '३७६। ऋत्विग्-।३।२।५९।' इत्यादिना क्विन् ॥

युष्मन्मित्रपुत्रोऽङ्गदोऽप्यभेद्य इति दर्शयन्नाह—

९८१—कृताऽभिषेको युवराज-राज्ये
सुग्रीव-राजेन सुताऽविशेषम् ॥

तारा-विधेयेन कथं विकारं
तारा-सुतो यास्यति राक्षसार्थम्. ॥ ५० ॥

कृतेत्यादि—सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्तिना। तारासुतोऽङ्गदः यौवराज्ये कृताभिषेकः सुताविशेषमिति क्रियाविशेषणम्। सुतनिर्विशेषं ममैवायं सुतो न वालिन इति। तत्कथं राक्षसार्थं विकारं भेदं यास्यति। नैवेत्यर्थः॥

अन्यसमाश्रयादपि रामेण विग्रहो न युज्यत इति दर्शयन्नाह—

९८२–पश्यामि रामादधिकं समं वा
ना ऽन्यं, विरोधे यमुपाश्रयेम, ॥
दत्त्वा वरं सा ऽनुशयः स्वयम्भू-
रिन्द्रा ऽऽदयः पूर्व-तरं विरुद्धाः. ॥ ५१ ॥

पश्यामीत्यादि—रामादधिकं ज्यायांसं समानं वा न पश्यामि। यं विरोधे विग्रहनिमित्तमुपाश्रयेम आश्रयं गच्छेम। संप्रश्ने लिङ्। स्वयम्भूर्ब्रह्मा नाश्रया-श्रयः यतो वरं दत्त्वा सानुशयः विप्रतीकारवान् जातः। किमिदमकार्यमनुष्ठितं मयेति इन्द्रादयस्तु पूर्वतरं विरुद्धाः॥

एवं दुर्गसमाश्रयो ऽपि न युज्यत इति दर्शयन्नाह—

९८३–दुर्गा ऽऽश्रितानां बहुना ऽपि राजन्!
कालेन पार्ष्णिग्रहणा ऽऽदि-हेतुः ॥
दुर्गोपरोधं न च कुर्वतो ऽस्ति
शत्रोश् चिरेणा ऽपि दशा ऽऽस्य! हानिः ॥ ५२ ॥

दुर्गेत्यादि—दुर्गाश्रितानामस्माकं दुर्गोपरोधं कुर्वतः शत्रोर्बहुनापि कालेन हे राजन्! पार्ष्णिग्रहणादेः। आदिशब्दादाटविकान्तपालादिप्रकोपस्य हेतुर्नास्ति यद्वशादुपरोधो न भविष्यति। अत्र स्थितानां क्षय एव केवल न च शत्रोरुपरोधं कुर्वतः चिरेणापि हानिः। युद्धशरीरोपयोगिनां सर्वदा संभवात्॥

९८४–शस्त्रं तरूर्वी-धरमम्बु पानं
वृत्तिः फलैर्, नो गज-वाजि-नार्यः ॥
राष्ट्रं न पश्चान्, न जनोऽभिरक्ष्यः,
किं दुःस्थमाचक्ष्व भवेत् परेषाम्. ॥ ५३ ॥

शस्त्रमित्यादि—तरवश्च उर्वीधराश्चेति '९१०। जातिरप्राणिनाम् ।२।४।६।' इति एकवद्भावः। तच्छस्त्रं न खड्गादि। पानमम्बु न मैरेयादि। फलैर्वृत्तिर्नौ-दनादिभिः। नो गजवाजिनार्यः शरीरमात्रस्याभिशिन्ताः। राष्ट्रं देशो न पश्चात्,

अत एव तस्थो जनो नाभिरक्ष्यः । एवं च सति परेषां किं दुःखं इत्याचक्ष्व कथय । अतो रामेण ज्यायसा संधिरेवास्तु न विग्रह इति ॥

तदेव दर्शयन्नाह—

९८५—संधानमेवा ऽस्तु परेण तस्मान्,
नाऽन्यो ऽभ्युपायो ऽस्ति निरूप्यमाणः, ॥
नूनं वि-संधौ त्वयि सर्वमेतन्
नेष्यन्ति नाशं कपयो ऽचिरेण.' ॥ ५४ ॥

संधानमित्यादि—तस्मात्परेण संधिरेवास्तु । अन्य उपायो नास्ति । अन्यथा त्वयि विरुद्धबुद्धौ सर्वं कपयो विनाशयिष्यन्तीति ॥

९८६—विभीषणोक्तं बहु मन्यमानः
प्रोन्नम्य देहं परिणाम-नम्रम् ॥
स्खलद्-वलिर् वार्धक-कम्प्र-मूर्धा
मातामहो रावणमित्युवाच. ॥ ५५ ॥

विभीषणोक्तमित्यादि—बहु मन्यमान. श्लाघमानो मातामहो मातुः पिता माल्यवान्नाम । देहं परिणामनम्रं वयसः परिणामात्रमनशीलं प्रोन्नम्योत्क्षिप्य । अत एव स्खलद्वलिः । वार्धकेन वृद्धभावेन । मनोज्ञादित्वात् वुञ् । कम्प्र. कम्पनशीलो मूर्धा यस्य सः । रावणमिति वक्ष्यमाणमुवाच ॥

९८७—'एकः पदातिः पुरुषो धनुष्मान्
यो ऽनेक-मायानि वियद्-गतानि ॥
रक्षः-सहस्राणि चतुर्दशा ऽऽर्दीत्,
का तत्र वो मानुष-मात्र-शङ्का. ॥ ५६ ॥

एक इत्यादि—एकः असहायः पदातिः न हस्त्याद्यारूढ. पुरुषो मनुष्यः । धनुष्मान् धनुर्मात्रायुधः । चतुर्दश रक्षःसहस्राणि अनेकमायानि वियद्गतानि मयानुमशक्यानि । परेषामित्यर्थात् । आर्दीत् हिंसितवान् । का तत्र वः युष्माकं मानुषमात्रशङ्का, नैवेत्यर्थः ॥

किंतु दिव्योऽसाविति तदेव दर्शयन्नाह—

९८८—ब्रह्मर्षिभिर् नूनमयं स-देवैः
संतापितै रात्रिचर-क्षयाय ॥
नरा ऽऽकृतिर् वानर-सैन्यशाली
जगत्त्य-जय्यो विहितो ऽभ्युपायः. ॥ ५७ ॥

ब्रह्मेत्यादि—मन्ये वैर्ब्रह्मादिभिः संतापितैः रात्रिचरक्षयाय नूनमयं राम उपायो विहितः उत्पादितः । नराकृतिः आकृत्यैव केवलं नरः । वानरसैन्यशाली आढ्यः । अजय्यो जेतुमशक्यः ॥

इत्थमेवं प्रकारो देवानां मयेति दर्शयन्नाह—

९८९—वज्राऽभिघातैर-विरुग्ण-मूर्तेः
फेणैर् जलानामसुरस्य मूर्ध्नः ॥
चकार भेदं मृदुभिर् महेन्द्रो
यथा, तथैतत् किमपीति बोध्यम्. ॥ ५८ ॥

वज्राभिघातैरित्यादि—असुरस्य नमुचेः वज्राभिघातैरपि अविरुग्णमूर्तेः अचूर्णितशरीरस्य मंथनिधनो मूर्ध्नो जलानां फेणैर्मृदुभिः भेदं चकार यथा तथेद-मपि शमे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यम् ॥

अन्यथा कथ फेणपिण्डैर्विनाश इत्याह—

९९०—क स्त्री-विषह्याः करजाः, क वक्षो
दैत्यस्य शैलेन्द्र-शिला-विशालम्, ॥
संपश्यतैतद् द्युमदां सुनीतं,
बिभेद तम् तन् नर-सिंह-मूर्तिः. ॥ ५९ ॥

केत्यादि—स्त्रीविषह्याः स्त्रीभिः सोढुं शक्याः करजा नखाः क । दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलाविशालं वक्षः क च । वक्षःकरजयोरपि दूरमन्तरं, तथापि द्युमदां देवानां एतत्सुनीतं सुनयं संपश्यत । यत् तैर्नखैर्नरसिंहमूर्तिः तद्वक्षो बिभेद ॥

यत्रैवमुपायेन दैवैर्निहन्यते तत्र त्वं कथं प्रमादी मुह्यसीत्याह—

९९१—प्रमाद-वांम् त्वं क्षत-धर्म-वर्त्मा
गतो मुनीनामपि शत्रु-भावम्, ॥
कुलस्य शान्तिं बहु मन्यसे चेत्
कुरुष्व राजेन्द्र ! विभीषणोक्तम्.' ॥ ६० ॥

प्रमादवानित्यादि—त्वं यतः प्रमादी अजितेन्द्रियत्वात् । क्षतधर्मवर्त्मा त्यक्ताचारः । अतो मुनीनामपि शमे स्थितानां शत्रुत्वं गतः । ईदृशोऽपि कुलस्य शान्तिं बहु मन्यसे चेत् श्लाघसे यदि । हे राजेन्द्र ! कुरुष्व विभीषणोक्तम् ॥

९९२—घोषेण तेन प्रतिलब्ध-संज्ञो
निद्राऽऽविलाऽक्षः श्रुत-कार्य-सारः ॥

स्फुरद्-घनः सा॒ऽम्बुरिवा ऽन्तरीक्षे
वाक्यं ततो ऽभाषत कुम्भकर्णः ॥ ६१ ॥

घोषेणेत्यादि—प्रहस्तविभीषणमातामहानां वदतां यो घोषः तेन प्रतिलब्धसंज्ञो विबुद्धः कुम्भकर्णो निद्राविलाक्षः निद्रया कषायितचक्षुः श्रुतकार्यसारः श्रुतकार्यशरीरः। ततः कार्यसारश्रवणानन्तरं वाक्यमभाषत। यथा घनः साम्बुः सजलोऽन्तरीक्षे वियति स्फूर्जति तद्वत् स्फूर्जन्निति ॥

कार्यं निश्चित्य सदसि भाषणानि न पञ्चाङ्गमन्त्रं विनेति साङ्गं तं तावदुपदर्शयन्नाह—

९९३—'क्रिया-समारम्भ-गतो ऽभ्युपायो,
नृ-द्रव्य-सम्पत् सह-देश-काला, ॥
विपत्-प्रतीकार-युता ऽर्थ-सिद्धिर्
मन्त्रा॒ऽङ्गमेतानि वदन्ति पञ्च. ॥ ६२ ॥

क्रियेत्यादि—क्रियाणां दुर्गादिकर्मणां यः समारम्भस्तं गतः प्राप्तो योऽभ्युपायः कर्मणामारम्भोपाय इत्यर्थः। इदमेकमङ्गम्। नृद्रव्यसम्पत् पुरुषाणां द्रव्याणां च सम्पदिति द्वितीयम्। द्वयोस्सहवचनं योगवाहित्वज्ञापनार्थम्। सहदेशकालेति। यस्मिन् देशे काले च कार्यसिद्धिस्ताभ्यां सह वर्तत इति तृतीयम्। अत्रापि सहवचनं योगादेव। कर्मणामनुष्ठीयमानानां या विपत्तस्याः प्रतीकारस्तेन युक्तेति चतुर्थम्। अर्थसिद्धिः कार्यसिद्धिरिति पञ्चमम्। एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः ॥

९९४—न निश्चिता॒ऽर्थं समयं च देशं
क्रिया॒ऽभ्युपाया॒ऽऽदिषु यो ऽतियायात्, ॥
स प्राप्नुयान् मन्त्र-फलं न मानी
काले विपक्षे क्षणदा-चरेन्द्र ! ॥ ६३ ॥

नेत्यादि—विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मिन् समये काले देशे च कार्यसिद्धिः तादृशं समयं देशं च यो विजिगीषुर्नातियायात् नातिक्रामेत्। प्रतिषेध्यस्य द्वित्वात् प्रतिषेधद्वयं योज्यम्। समयं च देशमिति पाठान्तरे समुच्चयेनैक एव योज्यः। क्रियाभ्युपायादिषु सत्सु, आदिशब्दात् पुरुषद्रव्यसंपद्विपत्प्रतीकारे च स प्राप्नुयान्मन्त्रफलम्। हे क्षणदाचरेन्द्र! स पुनर्मानी भवादृशः काले विपक्षे प्राप्नोति। स हि देशकालौ हापयति ॥

९९५—औष्ण्यं त्यजेन् मध्य-गतो ऽपि भानुः,
शैत्यं निशायामथवा हिमांशुः ॥

अनर्थ-मूलं भुवनाऽवमानी
मन्ये न मानं पिशिताशि-नाथ ! ॥ ६४ ॥

औष्ण्यमित्यादि—हे पिशिताशिनाथ ! भानुर्मध्यगतोऽपि मध्याह्नेऽपि औष्ण्यमुष्णतां त्यजेत् । संभावने लिङ् । अथवा हिमांशुर्निशायामपि शैत्यं त्यजेत् । भुवनावमानी भुवर्भुवनमवमन्तुं शीलमस्येति । नास्ति मत्सम इति स भवादृशो मानं न त्यजेत् । अनर्थमूलं अनर्थस्य कारणम् । एवं मन्ये जानामि ॥

९९६—तथा ऽपि वक्तुं प्रसभं यतन्ते
यन् मद्-विधाः सिद्धिमभीप्सवस् त्वाम् ॥
विलोम-चेष्टं विहिताऽवहासाः
परैर् हि तत् स्नेह-मयैम् तमोभिः ॥ ६५ ॥

तथापीत्यादि—तथापि एवमपि सति मद्विधाः सिद्धिं कार्यनिष्पत्तिमभीप्सवः आप्तुमेषणशीलाः । यत्त्वां विलोमचेष्टं प्रतिकूलचेष्टितम् । प्रसभमाहत्य वक्तुं यतन्ते । परैः शत्रुजनैः शत्रुजनैर्वा विहितावहासा एवंविधा अप्युपदिशन्तीति । वाशब्दः पादपूरणे । तत्स्नेहमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः । स्नेहतमसावृता ब्रुवन्तीत्यर्थः ॥

९९७—क्रूराः क्रियाः, ग्राम्य-सुखेषु सङ्गः,
पुण्यस्य यः संक्षय-हेतुरुक्तः, ॥
निषेवितो ऽसौ भवता ऽतिमात्रं
फलत्य-वल्गु ध्रुवमेव राजन् ! ॥ ६६ ॥

क्रूरा इत्यादि—क्रूराः क्रियाः परहिंसादयः, ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः, यः पुण्यस्यार्जितस्य संक्षयहेतुरुक्तः विद्यावृद्धैः । असौ भवतातिमात्रं सुष्ठु निषेवितः सन् हे राजन् ! इदानीं फलति फलं ददाति । अवल्गु असारम् । ध्रुवमविनाशम् ॥

तस्माद्विलोमचेष्टस्य भवतो हितोपदेशे मम न किंचित् प्रयोजनं, तावत्तु स्यात् त्वदर्थे मत्प्राणत्याग इति दर्शयन्नाह—

९९८—दत्तं न किं, के विषया न भुक्ताः,
स्थितो ऽस्मि वा कं परिभूय नोच्चैः, ॥
इत्थं कृताऽर्थस्य मम ध्रुवं स्यान्
मृत्युस् त्वदर्थे यदि, किं न लब्धम्. ॥ ६७ ॥

दत्तमित्यादि—तव प्रसादादर्थिभ्यः किं न दत्तम्, के विषया न भुक्ताः, सर्व एवानुभूताः । कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि ।

इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युरवश्यं स्यात्, तदा किं न लब्धम्। सर्वमेव जन्मफलं लब्धमित्यर्थः ॥

तत्र पुनरपि विभीषणोक्तं युक्तं, न महत्त्वमुत्कोचमिति दर्शयन्नाह—

९९९—किं दुर्नयैस् त्वय्युदितैर् मृषाऽर्थैर्
वीर्येण वक्ताऽस्मि रणे समाधिम्. ॥'
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा
विभीषणोऽभाषत राक्षसेन्द्रम्. ॥ ६८ ॥

किं दुर्नयैरित्यादि—त्वय्यपि स्थिते 'किं धीरभोऽस्तु' इत्यादिना यान्युदितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किम्। न किंचित् फलम्। कस्मादिति चेत् यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसंबन्धिना वीर्येण वक्ताऽस्मि वदिताहम्। रामवीर्यप्रतीकाराद्वीत्यर्थः। इत्थमेवं तस्मिन् कुम्भकर्णे उक्त्वा पुनः भूयः प्रसुप्ते सति विभीषणो राक्षसेन्द्रमभाषत ॥

१०००—'निमित्त-शून्यैः स्थगिता रजोभिर्
दिशो, मरुद्भिर् विकृतैर् विलोलैः ॥
स्वभाव-हीनैर् मृग-पक्षि-घोषैः
क्रन्दन्ति भर्तारमिवाऽभिपन्नम् ॥ ६९ ॥

निमित्तशून्यैरित्यादि—रजोभिर्निमित्तशून्यैः निर्निमित्तैः दिशः स्थगिताः संछादिताः। 'स्थग संवरणे'। मरुद्भिश्च विकृतैः परुषैर्विलोलैरनियतदिग्वर्तिभिः स्थगिताः। मृगपक्षिणां च घोषैः स्वभावहीनैर्भर्तारमिवाभिपन्नं मृतं शोकात् क्रन्दन्ति ॥

१००१—उत्पात-जं छिद्रमसौ विवस्वान्
व्यादाय वक्त्राऽऽकृति लोक-भीष्मम् ॥
अत्तुं जनान् धूसर-रश्मि-राशिः
सिंहो यथा कीर्ण-सटोऽभ्युदेति. ॥ ७० ॥

उत्पातजमित्यादि—असौ विवस्वान् छिद्रम् उत्पातजं वक्त्राकृति लोकभीष्मं लोकस्य भयानकं व्यादाय प्रसार्य। व्याङ्पूर्वस्य ददातेः क्त्वो ल्यपि रूपम्। जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्युदेति उद्गच्छति। यथा सिंहः कीर्णसटः विक्षिप्तकेसरकलापः मुखं व्यादायात्तुमुत्तिष्ठति तद्वदिति ॥

१००२—मार्गं गतो गोत्र-गुरुर् भृगूणा-
मगस्तिना ऽध्यासित-विन्ध्य-शृङ्गम्, ॥

संदृश्यते शक्र-पुरोहितो, ऽह्नि,
क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ॥ ७१ ॥

मार्गमित्यादि—अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्र-गुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्र इत्यर्थः । शक्रपुरोहितोऽपि बृहस्पतिः अह्नि दिवसे संदृश्यते । उल्काश्च क्ष्मां पृथिवीं कम्पयन्त्यः निपतन्ति ॥

१००३—मांसं हतानामिव राक्षसाना-
माशंसवः क्रूर-गिरो रुवन्तः ॥
क्रव्याऽशिनो दीप्त-कृशानु-वक्त्रा
भ्राम्यन्त्य-भीताः परितः पुरं नः ॥ ७२ ॥

मांसमित्यादि—राक्षसानां हतानामिव मांसमाशंसव आशंसनशीलाः '३१४८। सनाशंसभिक्ष उः ।३।२।१६८।' मांसभुज. शृगालादयः क्रूरगिरः परुषवचनाः कृशानुवक्त्राः ज्वलनसदृशवदनाः निर्भयाः परितो भ्रमन्ति ॥

१००४—पयो घटोध्नीरपि गा दुहन्ति
मन्दं वि-वर्णं वि-रसं च गोपाः, ॥
हव्येषु कीटोपजनः स-केशो
न दीप्यते ऽग्निः सु-समिन्धनो ऽपि. ॥७३॥

पय इत्यादि—गोपाः पयः क्षीरं विवर्णं दुर्वर्णं विरसं अस्वादु मन्दं अल्पं पयस्विनीरपि दुहन्ति । '५३९। अकथितं च ।१।४।५१।' इति द्विकर्मकता । तथा शोभनेन्धनोऽप्यग्निर्न दीप्यते, हव्येषु हवनीयेषु घृतादिषु सत्सु । '२८४२। अचो यत् ।३।१।९७।' उपजननमुपजनः । भावे घञ् । '२५१२। जनिवध्योश्च ।७।३।३५।' इति न वृद्धिः । कीटानामुपजनोऽस्येति कीटोपजनः । सहकेशैः सकेशः । दृश्यमानकीटकेश इत्यर्थः ॥

१००५—तस्मात् कुरु त्वं प्रतिकारमस्मिन्
स्नेहान् मया रावण ! भाष्यमाणः, ॥
वदन्ति दुःखं ह्यनुजीवि-वृत्ते
स्थिताः पदस्थं परिणाम-पथ्यम्. ॥ ७४ ॥

तस्मादित्यादि—यस्मादेवं विनाशसूचकानि निमित्तानि दृश्यन्ते, तस्मात् हे रावण ! स्नेहान्मया त्वं भाष्यमाणः अस्मिन् वस्तुनि प्रतीकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु । '१०४४। उपसर्गस्य घञ्—।६।३।१२२।' इति बहुलं दीर्घः । कस्मादेवं भाष्यत इति चेत् । यस्मादनुजीविवृत्तेऽवस्थिता. यद्वचनं दुःखं

दुःखहेतु तदा कटुकत्वात् । परिणामपथ्यम् आयत्यां हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति ॥

१००६—विरुग्ण-संकीर्ण-विपन्न-भिन्नैः
प्रक्षुण्ण-संहीण-शिताऽस्त्र-वृक्णैः ॥
यावन् नराऽशैर् न रिपुः शवाऽशान्
संतर्पयत्यानम तावदस्मै.' ॥ ७५ ॥

विरुग्णेत्यादि—यावद्रिपुः नराशैः राक्षसैः शवाशान् गृध्रशृगालादीन् । शवमश्नन्ति इति कर्मण्यण् । न संतर्पयति न प्रीणयति तावदस्य रिपोः आनम चरणावित्यर्थात् । कीदृशैः । विरुग्णैर्भिन्नाङ्गैः । '३०१९। ओदितश्च ।८।२।४५।' इति निष्ठानत्वम् । संकीर्णैः इतस्ततो विक्षिप्तैः, विपन्नैर्मृतैर्भिन्नैर्विदारितदेहैः, प्रक्षुण्णैः । पूर्ववत् '३०१६। रदाभ्याम्—।८।२।४२।' इति नत्वम् । संहीणैर्लज्जितैः वयमेवमवस्थां नीता इति । शितेन तीक्ष्णेन अस्त्रेण वृक्णैः छिन्नैः । '२४१२। ग्रहि-ज्या—।६।१।१६।' इत्यादिना सम्प्रसारणम् । संयोगादिलोपः । कुत्वं च । ओदित्वान्नत्वम् ॥

१००७—भ्रू-भङ्गमाधाय विहाय धैर्यं
विभीषणं भीषण-रूक्ष-चक्षुः ॥
गिरं जगादोग्र-पदामुदग्रः
स्वं स्फावयन् शक्र-रिपुः प्रभावम्. ॥ ७६ ॥

भ्रूभङ्गमित्यादि—शक्ररिपुर्दशाननः विभीषणवचनात् क्रुद्धः । भ्रूभङ्गं भ्रुकुटिमाधाय आबध्य धैर्यं विहाय त्यक्त्वा भीषणरूक्षचक्षुः भयानकपरुषचक्षुः । उदग्रः उन्नामितदेहः स्वं प्रभावं विक्रमं स्फावयन् वर्धयन् । '२५९७। स्फायो वः ।७।३।४१।' इति णौ वत्वम् । विभीषणं जगाद गिरं वाचम् । उग्रपदां सुप्तिङन्तानां स्वरूपतोऽर्थतश्च परुषत्वात् ॥

१००८—'शिला तरिष्यत्युदके न पर्णं,
ध्वान्तं रवेः स्यन्त्स्यति, वह्निरिन्दोः' ॥
जेता परो ऽहं युधि जेष्यमाणस्
तुल्यानि मन्यस्व पुलस्त्य-नप्तः ! ॥ ७७ ॥

शिलेत्यादि—उदके शिला तरिष्यति न पुनः पर्णम् । रवेः सूर्यात् ध्वान्तमन्धकारं स्यन्त्स्यति स्रविष्यति । '८१४। स्यन्दू प्रस्रवणे' इत्यस्मात् '२३४८। न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।' इतीट् न भवति । '१२१। खरि च ।८।४।५५।' इति चर्त्वम् । तथा वह्निरिन्दोः स्यन्त्स्यति । अहमप्येष परं उत्कृष्टः जेता युधि संग्रामे जेष्यमाण इत्येतानि चत्वारि हे पुलस्त्यनप्तः विभीषण ! तुल्यानि

मन्यस्व अवगच्छ। लोटि रूपम्। यदि जेताप्यहं परेण जीये शिलातरणादी-न्यपि भविष्यन्ति॥

१००९—अ-निर्वृतं भूतिषु गूढ-वैरं
सत्कार-काले ऽपि कृता ऽभ्यसूयम्॥
विभिन्न-कर्मा ऽऽशय-वाक् कुले नो
मा ज्ञाति-चेलं, भुवि कस्यचिद् भूत्॥ ७८॥

अनिर्वृतमित्यादि—भूतिषु ज्ञातिसंबन्धिनीषु अनिर्वृतमसुखितम्। गूढ-वैरं काले हनिष्यामीति संभृतापकाराशयम्। सत्कारकालेऽपि पूजाकालेऽपि कृतामर्षम्। विभिन्नाः कर्माशयवाचो यस्य तद्विभिन्नकर्माशयवाक्। आशयो-ऽन्यो वाक्कर्मणी चान्ये यस्येति। ईदृशं ज्ञातिचेलं गर्हितज्ञातिरस्माकं कुले मा भूत्। कस्यचिदन्यस्य वा मा भूत्। चेलशब्दो गर्हिते वर्तते॥

१०१०—इच्छन्त्यभीक्ष्णं क्षयमात्मनो ऽपि
न ज्ञातयस् तुल्य-कुलस्य लक्ष्मीम्॥
नमन्ति शत्रून्, न च बन्धु-वृद्धिं
संतप्यमानैर् हृदयैः सहन्ते.॥ ७९॥

इच्छन्तीत्यादि—ज्ञातय. आत्मन सुष्ठु क्षय विनाशमिच्छन्ति, न पुनस्तु-ल्यकुलस्य एकहेतुगोत्रस्य लक्ष्मीं श्रियम्। तथा शत्रुं कामं नमन्ति, न पुनर्बन्धु-वृद्धिं बन्धुसन्तर्तिं सहन्ते। संतप्यमानैर्हृदयैः ईर्ष्यया दह्यमानैः॥

किं मया कृतं येनैवमुच्यत इति चेदाह—

१०११—त्वयाऽद्य लङ्काऽभिभवे ऽति-हर्षाद्
दुष्टो ऽति-मात्रं विवृतो ऽन्तरात्मा,॥
धिक् त्वां, मृषा ते मयि दुस्थ-बुद्धिर्'
वदन्निदं तस्य ददौ स पार्ष्णिम्.॥ ८०॥

त्वयेत्यादि—लङ्कापरिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दुष्टान्तरात्मा अतिमात्रं सुष्ठु त्वयाद्य विवृतः प्रकाशितः। मयि दुस्थबुद्धिः अस्मद्विषये दुस्थो-ऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्या। अतस्त्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनोपाश्रितबाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ॥

१०१२—ततः स कोपं क्षमया निगृह्णन्,
धैर्येण मन्युं, विनयेन गर्वम्,॥
मोहं धियोत्साह-वशाद् वशार्ङ्कि,
समं चतुर्भिः सचिवैरुदस्थात्.॥ ८१॥

तत इत्यादि—ततः पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया शान्त्या निगृह्णन् अभिभवन्, तथा धैर्येण मन्युं शोकं, विनयेन गर्वं, मोहं वैचित्त्यं धिया प्रज्ञया, उत्साहवशाच्छक्तिमसामर्थ्यं निगृह्णन् अपमानेन कोपादीनां संभवात्। चतुर्भिः सचिवैरमात्यैः समं सार्धमुपस्थात् आसनादुत्थितः ॥

१०१३—उवाच चैनं क्षणदा-चरेन्द्रं—

'सुखं महा-राज! विना मया ऽऽस्स्व. ॥

मूर्खा ऽऽतुरः पथ्य-कटून्ननश्नन्

यत् सा ऽऽमयोऽसौ, भिषजां न दोषः ॥८२॥

उवाचेत्यादि—उत्थितश्चानन्तरं रावणमुवाच—हे महाराज! मया विना सुखमास्स्व तिष्ठ। आसेर्लोट्। तथात्र दोषो न ममोपदेष्टुः। यस्मान्मूर्खातुरः मूर्खो य आतुरः पथ्यकटूनन्नश्नन् अभक्षयन् यत्सामयः रोगवान् असौ भिषजां वैद्यानां न दोषः, किंतु तस्यैव ॥

१०१४—करोति वैरं स्फुटमुच्यमानः,

प्रतुष्यति श्रोत्र-सुखैर-पथ्यैः ॥

विवेक-शून्यः प्रभुरात्म-मानी,

महाननर्थः सुहृदां बता ऽयम्. ॥ ८३ ॥

करोतीत्यादि—प्रभुर्विवेकशून्यो निर्विवेकः। आत्ममानी मत्समोऽन्यो नास्तीति आत्मानं श्लाघमानः। आत्ममाने इनिः। स्फुटमुच्यमानो वैरं करोति स्नेहं करोति पथ्यमनेनोक्तमिति। श्रोत्रसुखैः तदर्थमनोहारिभिः अपथ्यैस्तुष्यति। तस्मादयं प्रभुः सुहृदामाश्रितानां महान् अनर्थः। अनर्थहेतुत्वात्। बतशब्दः खेदे ॥

१०१५—क्रीडन् भुजङ्गेन गृहा ऽनुपातं

कश्चिद् यथा जीवति संशय-स्थः, ॥

संसेवमानो नृ-पतिं प्र-मूढं

तथैव यज् जीवति, सो ऽस्य लाभः. ॥ ८४ ॥

क्रीडन्नित्यादि—यथा कश्चित् सर्पग्राही गृहानुपातं गृहं गृहमनुपत्य। '३।४।७८। विशि-पति-।३।४।५६।' इत्यादिना णमुल्। भुजङ्गेन सह क्रीडन् जीवति संशयस्थः संदेहे वर्तमानः किमयं खादिष्यति न वेति। तथैव प्रमूढं मूर्खं नृपतिं संसेवमानो यज्जीवति सोऽस्य लाभः। आत्मलाभस्यो लाभ इति ॥

१०१६—दत्तः स्व-दोषैर् भवता प्रहारः

पादेन धर्म्ये पथि मे स्थितस्य, ॥

स चिन्तनीयः सह मन्त्रि-मुख्यैः

कस्या ऽऽवयोर् लाघवमादधातु. ॥ ८५ ॥

दत्त इत्यादि—स्वदोषैरविवेकित्वादिभिर्भवता पादप्रहारः यो मम धर्म्ये धर्मादनपेते मार्गे स्थितस्य दत्तः, स मन्त्रिमुख्यैरेतैः सह चिन्तनीयः। आयत्यो- र्मध्ये कस्य लाघवमादधातु करोत्विति। यावन्निरूप्यमाणस्तावदेवेति भावः॥

१०१७—इति वचनमसौ रजनि-चर-पतिं
बहु-गुणमसकृत् प्रसभमभिदधत्॥
निरगमदं-भयः पुरुष-रिपु-पुरान्
नर-पति-चरणौ नवितुमरि-नुतौ. ॥ ८६ ॥

इतीत्यादि—इत्येवं वचनं बहुगुणम् अर्थावगाढत्वात् असकृत् बहुत्वात् प्रसभम् आहत्य रजनिचरपतिमभिदधत् ब्रुवन्। '४२७। नाभ्यस्ताच्छतुः। ७।१।७८।' इति नुम्प्रतिषेधः। रजनिचर इति '१००१। ङ्यापोः संज्ञाच्छन्द- सोर्बहुलम्।६।३।६३।' संज्ञायां ह्रस्वत्वम्। पुरुषरिपुपुराल्लङ्कातः निरगमत् निष्क्रान्तः। अभयः सन् नरपतिचरणौ रामस्य पादौ अरिभिरपि नुतौ शूर- त्वात्। '२३८१। श्र्युकः—।७।२।११।' इतीट्प्रतिषेधः। नवितुं प्रणामपूर्वकं स्तोतुम्। अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः॥

१०१८—अथ तमुपगतं विदित-सुचरितं
पवन-सुत-गिरा गिरि-गुरु-हृदयः॥
नृ-पतिरमदयन् मुदित-परिजनं
स्व-पुर-पति-करैः सलिल-समुदयैः. ॥ ८७ ॥

इति भट्टिकाव्ये प्रसन्न-काण्डे भाविकत्वप्रदर्शनस्
तृतीयः॥ काव्यस्य द्वादशः सर्गः॥

अथेत्यादि—अथ अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले राममुप- गतवानिति द्रष्टव्यम्। अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत। पवनसुत- गिरा हनूमद्वचनेन सच्चरितोऽयमिति विदितं सुचरितं येन नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्प हृदयं यस्य। सलिलसमुदयैः जलपूर्णघटे स्थितैः स्वपुरपतिकरैः। लङ्काधिपतिं कुर्वन्नीति हेतौ ट.। अमदयत् हर्षितवान्। '८१५। मदी हर्षे' इत्यस्य हेतुमण्ण्यन्तस्य घटादित्वान्मित्त्वे ह्रस्वत्वम्। मुदित- परिजनं स्वामी लङ्काधिपत्येऽभिषिच्यत इति तस्य हृष्टा अनुजीवन इत्यर्थः॥

इति श्री-जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्री-भट्टिकाव्ये
तृतीये प्रसन्न-काण्डे लक्षण-रूपे तृतीयः परिच्छेदः ( वर्गः ),
तथा लक्ष्य-रूपे कथानके 'विभीषणाऽऽगमनो' नाम
द्वादशः सर्गः॥

## त्रयोदशः सर्गः—

काव्यं संस्कृतप्राकृतापभ्रंशभेदात्रिविधम् । तत्र शब्ददेशीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समावेशासंभवात् शब्दसमायाः प्राकृतभाषायाः समावेशः । तमार्यागीत्या स्कन्धकलक्षणया दर्शयन्नाह ॥

विभीषणागमनात्प्राक् यद्वृत्तं रामस्य तदाह—

१०१९—चारु-समीरण-रमणे
हरिण-कलङ्क-किरणाऽऽवली-स-विलासा ॥
आबद्ध-राम-मोहा
वेला-मूले विभावरी परिहीणा. ॥ १ ॥

चार्वित्यादि—रामो रात्रौ निद्रावान् पल्लवशयनमध्यस्थादित्युक्तम् । तस्य नियमपूर्वं सुप्तवतः प्रभातमभूदिति कथयति । वेलामूले पारसमीपे । प्राकृते पुंलिङ्गनपुंसकयोराकारान्तस्य पदस्य सप्तम्या एकवचने मिरवमेत्वं वा रूपम् । चारुसमीरणरमणे रमयतीति रमणम् । '२८९६। नन्दि–।३।१।१३४।' इत्यादिना ल्युः । समीरणेन रमणम् । चारु च तत्समीरणरमणं चेति । तत्र विभावरी रात्रिः परिहीणा क्षीणा । हरिणकलङ्कस्य याः किरणावल्यः ताभिः सविलासा सविभ्रमा । अतश्चाबद्धो रामस्य मोहो मूर्च्छा ययेति । 'कृदिकारादक्तिनः' इत्यनेन आवलिरावलीत्युभयमपि संस्कृतप्राकृतयोः प्रयुज्यते ॥

१०२०—बद्धो वासर-सङ्गे
भीमो रामेण लवण-सलिलाऽऽवासे ॥
सहसा संरम्भ-रसो
दूराऽऽरूढ-रवि-मण्डल-समो लोले. ॥ २ ॥

बद्ध इत्यादि—नियमास्थितेऽपि मयि नासौ समुद्र उत्थित इति । वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे समुद्रे इति विषयसप्तमी । सहसा तत्क्षणं संरम्भरसः क्रोधरसो वीराख्यः भीमो दुःप्रेक्ष्यः बद्धो जनितः । दूरारूढरविमण्डलसमो लोल इति । दूरमारूढो मध्याह्नस्थो यो रविः तस्य मण्डलं तेन समस्तुल्योऽतितीक्ष्णत्वात् । लोले चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात् ॥

१०२१—गाढ-गुरु-पुङ्ख-पीडा-
स-धूम-सलिलाऽरि-संभव-महा-बाणे ॥
आरूढा संदेहं
रामे स-मही-धरा मही स-फणि-सभा. ॥ ३ ॥

गाढेत्यादि—गाढं सुष्ठु गुरोः पुङ्खस्य या पीडा पीडनम् अङ्गुष्ठाभ्यां तया हेतुभूतया सधूमसलिलाग्नेः अग्नेः संभवो यत्र स महाबाणो यस्य रामस्य तस्मिन् सति । महासंदेहमारूढा संशयं प्राप्ता समहीधरा मही सफणिसभा सह भुजङ्गसमूहेन । धारयन्तीति धराः । अत्र धकारस्य पदमुखे वर्तमानस्य हकारो न भवति । प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् । महीधर इति समस्तपदेऽपि न प्रवर्तते । अत्र पूर्वपदमुत्तरं पदमिति व्यपदेशात् । एवं च सति गोधर-वज्रधर-चक्रधर-शङ्खधरादिषु न प्रवर्तते । महीधरो महीधर इत्युभयमपि प्राकृते प्रयुज्यते । अहमानां विकल्पेन ह्रस्वदर्शनात् ॥

१०२२—घोर-जल-दन्ति-संकुल-

अट्ट-महापङ्क-काहल-जला॒ऽऽवासम् ॥

आरीणं लवण-जलं

समिद्ध-फल-बाण-विद्ध-घोर-फणि-वरम् ॥४॥

घोरेत्यादि—रामेणाग्नेये शरे क्षिप्ते सति लवणजलमारीणं समन्तात् शुष्कम् । '११३८। रीङ् स्रवणे' इत्यस्मात् निष्ठातकारस्य 'स्वादय ओदितः' इति नत्वम् । '१९७। अट्—कुपु—।८।४।२।' इति णत्वम् । रीणमित्यप्रयोगः प्राकृते महाराष्ट्रे तस्याप्रयोगात् । घोरैः रौद्रैर्जलदन्तिभिः संकुलं व्याप्तम् । अट्टः शुष्को यो महापङ्कः तेन काहला विह्वला जलावासा मत्स्यालयो यत्र । '२६३। अट्ट अतिक्रम-हिंसनयोः' इत्यस्य रूपम् । समिद्धफलेन दीप्तफलेन बाणेन विद्धाः घोराः फणिवराः महासर्पा यत्रेति ॥

१०२३—स-भयं परिहरमाणो

महा॒ऽहि-संचार-भासुरं सलिल-गणम् ॥

आरूढो लवण-जलो

जल-तीरं हरि-बला॒ऽऽगम-विलोल-गुहम् ॥५॥

सभयमित्यादि—सलिलगणं सलिलसमूहं सभयम् । महाहीनां संचारणं भासुरं भासनशीलम् । तच्छिरोमणिद्योतितत्वात् परिहरमाणः परित्यजन् । कर्त्रभिप्राये तङ् । लवणजलः समुद्रः । लवणं जलमस्येति । जलतीरं तटं यत्र रामस्तिष्ठति तदारूढः संप्राप्तो मूर्तिमान् । हरिबलागमेन वानरसैन्यागमेन विलोला व्याकुला गुहा यत्रेति ॥

१०२४—चञ्चल-तरु-हरिण-गणं

बहु-कुसुमा॒ऽऽबन्ध-बद्ध-रामाऽऽवासम् ॥

हरि-पल्लव-तरु-जालं

तुङ्गो॒रु-समिद्ध-तरु-वर-हिम-च्छायम् ॥ ६ ॥

चञ्चलेत्यादि—चञ्चलश्चपलः तरुहरिणानां वानराणां गणो यत्र जलतीरे । बहुकुसुमानां वृक्षाणामाबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामावासो यत्र । हरिपल्लवानि तरुजालानि यत्र । तुङ्गा उरवः परिमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैर्हिमा शीतला छाया यत्र तज्जलतीरम् ॥

१०२५—वर-वारणं सलिल-भरेण
गिरि-मही-मण्डल-संवर-वारणम् ॥
वसु-धारयं तुङ्ग-तरङ्ग-सङ्ग-
परिहीण-लोल-वसुधा-रयम् ॥ ७ ॥

कुलकम् ॥ एतानि सप्त संकीर्णानि ॥

वरेत्यादि—वरा उत्कृष्टा वारणा यत्र । सलिलभरेण सलिलसमूहेन यो गिरीणां महीमण्डलस्य च संवरः संवरणमावरणम् । '३२३४। ग्रह—।३।३।५८।' इत्यादिनाप् । तस्य वारणं निषेधकम् । समुद्रस्य वेलातिक्रमात् । वसु द्रव्यं तस्य धारयं धारकम् । '२९००। अनुपसर्गात्—।३।१।१३८।' इति णिजन्ताच्छः । तुङ्गाः अभ्रंलिहा ये तरङ्गास्तैः सह यः सङ्गः संश्लेषः तस्मात् परिहीणो नष्टो लोलो वसुधायां तत्संबन्धिन्यां रयो वेगो यत्र तज्जलतीरमारूढः । गणितक्रममेतत् । एतानि सप्त संकीर्णानि । संस्कृतप्राकृतयोरविशिष्टत्वात् ॥

१०२६—प्रणिपत्य ततो वचनं
जगाद हितमायतो पतिर् वारीणाम् ॥
गङ्गाऽवलम्बि-बाहू
रामं वहलोरु-हरि-तमाल-च्छायम्. ॥ ८ ॥

प्रणिपत्येत्यादि—ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य वचनं जगाद । हितमात्मनो रामस्य पथ्यमायतावागामिनि काले । गङ्गावलम्बी गङ्गावलम्बनशीलः संपूर्णस्वाद्वाहुर्यस्य स गङ्गावलम्बिबाहुः । संस्कृते '१७४। ढ्लोपे पूर्वस्य दीर्घोऽणः ।६।३।१११।' प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वम् । विभक्तिसकारस्य च लोपः । उरुर्महान् हरिः हरितो यस्तमालः । बहुला घना तस्येव छाया यस्य तमिति । पूर्वार्धे निरवद्यमिति । पूर्वस्मिन्नर्धे प्राकृतस्याभावात् निरवद्यं पश्चादर्धे तु संकीर्णमेव ॥

पूर्वाऽर्धं निरवद्यम्

१०२७—'तुङ्गा गिरि-वर-देहा,
अ-गमं सलिलं, समीरणो रस-हारी, ॥
अ-हिमो रवि-किरण-गणो,
माया संसार-कारणं ते परमा. ॥ ९ ॥

तुङ्गा इत्यादि—गिरिवरदेहाः कुलपर्वतकायाः तुङ्गाः प्रांशवः, अगमं सलिलं अगम्यम्। '३२१४। अह—।३।३।५८।' इत्यादिनाप्। समीरणो रसहारी अपामुच्छोषकः, अहिम उष्णः रवेः किरणगणः। एतत्सर्वं तव माया परमा महती संसारस्य कारणम्। सर्वथा त्वं विष्णुः त्वत्कृतेषु को रोष इति॥

१०२८—आयास-संभवारुण !

संहर संहार-हिम-हर-सम-च्छायम्॥

बाणं, वारि-समूहं

संगच्छ पुराण-चारु-देहाऽऽवासम्.॥ १०॥

आयासेत्यादि—यस्मात्संसारकारणं यदगम्यं सलिलं कृतं, तस्मात्त्वं हे आयाससंभवारुण रोषसंभवेन रक्तीभूत ! संहारे प्रलये हिमहरा आदित्यास्तैः समा छाया यस्य बाणस्य तं संहर उपसंहर। वारिसमूहं संगच्छ अङ्गीकुरु। सकर्मकत्वात् '२६९९। समो गमि—।१।३।२९।' इत्यात्मनेपदं न भवति। पुराणः शाश्वतः दर्शनीयो यो देहः तस्य आवासमवस्थानम्॥

१०२९—अ-सुलभ-हरि-संचारं

जल-मूलं बहल-पङ्क-रुद्धाऽऽयामम्॥

भण किं जल-परिहीणं

सु-गमं तिमि-कम्बु-वारि-वारण-भीमम्.॥ ११॥

असुलभेत्यादि—अन्यच्च यदेतज्जलमूलं जलस्यावस्थानं आग्नेयशरशोषितत्वाज्जलपरिहीणं सत्, तत् किं सुखेन गम्यत इति भण ब्रूहि। यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यत्र। तिमयो मत्स्याः कम्बवः शङ्खाः वारिवारणाः जलहस्तिनः तैर्भीमम्। एवं च सति असुलभो दुर्लभः हरिसंचारो वानरपर्यटनं यत्रेति॥

गमनोपायमाह—

१०३०—गन्तुं लङ्का-तीरं

बद्ध-महासलिल-संचरेण स-हेलम्॥

तरु-हरिणा गिरि-जालं

वहन्तु गिरि-भार-संसहा गुरु-देहम्.॥ १२॥

गन्तुमित्यादि—संचरन्त्यनेनेति संचरः। '३२९८। गोचर-संचर।३।३।११९।' इति टच्। बद्धो घटितो महासलिले यः संचरः सेन सेतुना सहेलम्। एकवद्भावा लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं तरुहरिणा वानरा गिरिभारस्य संसहाः क्षमाः। संसहन्ते इत्यच्। गिरिजालं गिरिसमूहं वहन्तु। गुरुर्देहः शरीरं यस्य गिरिजालस्य॥

१०३१—हर-हास-रुद्ध-विगमं
पर-कण्ठ-गणं महाऽऽहव-समारम्भे ॥
छिन्दन्तु राम-बाणा
गम्भीरे मे जले महा-गिरि-बद्धे. ॥ १३ ॥

हरेत्यादि—मे मम जले गम्भीरे अगाधे महागिरिभिर्बद्धे सति यो महाहवस्य समारम्भः प्रवर्तनं तस्मिन् परस्य शत्रोः कण्ठगणं ग्रीवासमूहं हरस्य तुष्टत्वात् यो हासः तेन रुद्धो विगमश्छेदो यस्य तं रामशराश्छिन्दन्तु । आशिषि लोट् ॥

१०३२—गच्छन्तु चारु-हासा
वीर-रसाऽऽबन्ध-रुद्ध-भय-संबन्धम् ॥
हन्तुं बहु-बाहु-बलं
हरि-करिणो गिरि-वरोरु-देहं सहसा. ॥ १४ ॥
एतानि षट् संकीर्णानि ॥

गच्छन्त्वित्यादि—बहवो बाहव एव बलं यस्य बाहूनां तरूणामिव बहुत्वात् । तं रावणं वीररसस्य शौर्यस्य य आबन्धः सन्ततप्रवर्तनं तेन रुद्धो निवारितो भयसंबन्धस्त्रासंसंपर्को यस्य तं गिरिवरोरुदेहं गिरिवन्महाकायं सहसा हन्तुं तत्क्षणं हनिष्याम इति हरिकरिणः कपिहस्तिनः चारुहासाः मम जले बद्धे सति गच्छन्तु ॥ एतानि षट् संकीर्णानि संस्कृतप्राकृतयोस्तुल्यत्वात् ॥

१०३३—जिगमिषया संयुक्ता
बभूव कपि-वाहिनी मते दाशरथेः ॥
बुद्ध-जलाऽऽलय-चित्ता
गिरि-हरणाऽऽरम्भ-संभव-समालोला. ॥१५॥
पूर्वाऽर्धं निरवद्यम् ।

जिगमिषयेत्यादि—दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव । बुद्धजलालयचित्ता विदितसमुद्राभिप्राया गिरीणां यद्धरणमानयनं तस्य य आरम्भसंभवः तेन समालोला आकुला ॥ इत्येतदर्धं निरवद्यम् ॥

१०३४—गुरु-गिरि-वर-हरण-सहं
संहार-हिमारि-पिङ्गलं राम-बलम् ॥

आरूढं सहसा खं
वरुणाऽऽलय-विमल-सलिल-गण-गम्भीरम् १६

गुर्वित्यादि—ततो रामबलं महसा तत्क्षणं समारूढम्। गुरूणां गिरिवराणां यदाहरणमानयनं तत्सहत इति मूलविभुजादित्वात् कः। तस्य वा सहं शक्तम्। सहत इत्यच्। संहारे प्रलये यो हिमारिरग्निः तद्वदपि शक्तम्। वरुणालयस्य समुद्रस्य यो विमलसलिलगणः निर्मलजलसमूहः तद्वद्गम्भीरं खमिति॥

कलापकं चतुर्भिः १७—२०

१०३५—अवगाढं गिरि-जालं
तुङ्ग-महा-भित्ति-रुद्ध-सुर-संचारम् ॥
अ-भयहरि-रास-भीमं
करि-परिमल-चारु-बहल-कन्दर-सलिलम्. १७

अवगाढमित्यादि—समारुह्य रामबलेन गिरिजालमवगाढं अवष्टब्धम्। तुङ्गाभिरुच्छ्रिताभिर्महतीभिः परिणाहवतीभिर्भित्तिभी रुद्धः सुराणां संचारो यस्मिन् तेषामुन्नतत्वात्। अभया ये हरयः सिंहास्तेषां रासेन शब्देन भीमं भयानकम्। करिणां च परिमलः संमर्दस्तेन चारु शोभनम्। बहलं घनं कन्दरसलिलं यस्मिन्॥

१०३६—अलि-गण-विलोल-कुसुमं
स-कमल-जल-मत्त-कुरर-कारण्डव-गणम् ॥
फणि-संकुल-भीम-गुहं
करि-दन्त-समूढ-स-रस-वसुधा-खण्डम् ॥१८॥

अलिगणेत्यादि—अलिगणैर्विलोलानि कुसुमानि यत्र। सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानां च गणा यत्र। फणिभिः संकुला व्याप्ताः सत्यो भीमा गुहा यत्र। करिदन्तैः समुत्क्षिप्तं सरसं सान्द्रं वसुधायाः खण्डं यत्र॥

१०३७—अरविन्द-रेणु-पिञ्जर-
सारस-रव-हारि-विमल-बहु-चारु-जलम् ॥
रवि-मणि-संभव-हिम-हर-
समागमाऽऽबद्ध-बहुल-सुर-तरु-धूपम् ॥१९॥

अरविन्देत्यादि—अरविन्दरेणुभिः पिञ्जराः पिङ्गला ये सारसास्तेषां रवेण हारि मनोहारि विमलं बहु चारु जलं यत्रेति। रविमणिसंभवः सूर्यकान्तमणिसम्भवः यो हिमहरः अग्निः तेन यः समागमः संश्लेषस्तेनाबद्धो जनितो बहुलः सुरतरुधूपो यत्र॥

१०३८—हरि-रव-विलोल-वारण-

गम्भीराऽऽबद्ध-स-रस-पुरु-संरावम् ॥

घोणा-संगम-पङ्काऽऽ-

विल-सुबल-भर-महोरु-वराहम्. ॥ २० ॥

एतानि पञ्च संकीर्णानि ॥

हरिरवेत्यादि—हरीणां सिंहानां यो रवस्तेन विलोलाश्चञ्चला ये वारणा-स्तैर्गम्भीरो मन्द्र आबद्धो जनितः सरसो भयानकरसयुक्तः पुरुर्महान् संरावो यत्र। घोणायाः संगमात् संपर्कात् संभवो यस्य पङ्कस्य। घोणासमुद्भूतो यः पङ्क इत्यर्थः। तेनाविला लिप्ताङ्गाः सुबलाः तत एव भरसहाः उरवश्च वराहा यत्र। तद्गिरिजालमालमवगाढमिति ॥ एतानि पञ्च संकीर्णानि ॥

१०३९—उच्चख्नुः परिरब्धान्

कपि-सङ्घा बाहुभिस् ततो भूमि-भृतः ॥

निष्पिष्ट-शेष-मूर्ध्नः

शृङ्ग-विकीर्णोष्ण-रश्मि-नक्षत्र-गणान्. ॥२१॥

सर्वं निरवद्यम् ॥

उच्चख्नुरित्यादि—ततोऽवगाहादनन्तरं बाहुभिः परिरब्धान् समाश्लिष्टान् भूमिभृतः पर्वतान् कपिसङ्घा उच्चख्नुः उत्खातवन्तः। '२३९३। गम-हन—।६।४।९८।' इत्युपधालोपः। निष्पिष्टशेषमूर्ध्नः व्याप्तपातालमूलत्वात् चूर्णित-नागराजमस्तकान्। शृङ्गैः शिखरैर्विकीर्णं उष्णरश्मिरादित्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् ॥ सर्वं निरवद्यमिति अत्र प्राकृतस्याप्रयुक्तत्वात् ॥

विशेषक त्रिभि.। २२—२४।—

१०४०—तुङ्ग-महा-गिरि-सुभरा

बाहु-समारुद्ध-भिदुर-टङ्का बहुधा ॥

लवण-जल-बन्ध-कामा

आरूढा अम्बरं महा-परिणाहम् ॥ २२ ॥

तुङ्गेत्यादि—तुङ्गा उच्चा महान्तः परिणाहवन्तो ये गिरयस्तैः सुभरा जात-भराः कपयः बाहुभिः समारुद्धा भिदुराः विदारणशीलाः टङ्का उन्नतप्रदेशा यैस्ते बहुधा अनेकप्रकारं लवणजलबन्धकामाः एवमेवं बद्धव्यमिति आतेच्छाः आरूढा अम्बरं महापरिणाहम् अप्रमेयदिग्विभागम् ॥

१०४१—बहु-धवल-वारि-वाहं

विमलाऽऽयस-महाऽसि-देह-च्छायम् ॥

बद्ध-विहङ्गम-मालं
हिम-गिरिमिव मत्त-कुरर-रव-संवद्धम् ॥२३॥

बद्धित्यादि—बहवो धवला वारिवाहा यत्राम्बरे । विमलायसः अयसो विकारः गुरुरलघुर्महान् योऽसिः खड्गः तस्य यो देहः तस्य छायेव छाया यस्य । बद्धा विरचिता विहङ्गानां माला पङ्क्तिर्यत्र । मत्तानां कुरराणां रवेण संवद्धं युक्तम् । अतो हिमगिरिमिवाम्बरमारूढा इति ॥

१०४२—चारु-कलहंस-संकुल-
मं-चण्ड-संचार-सारसाऽऽबद्ध-रवम् ॥
स-कुसुम-कण-गन्ध-वहं
समयाऽऽगम-वारि-सङ्ग-विमलाऽऽयामम् ॥२४

चारुकलहंसेत्यादि—चारुभिः कलहंसैः संकुलं व्याप्तम् । अचण्डसंचारैः शनैः संचरद्भिः सारसैराबद्धो रवो यस्मिन् । सकुसुमकणः सपुष्परेणुर्गन्धवहो वायुर्यत्रेति । वहनीति वहः कर्तर्यच् । गन्धस्य वह इति सः । समयस्य प्रावृट्कालस्य य आगमः तेन यो वारिसङ्गः तेन प्रक्षालितत्वात् विमला आयामा यत्र तदम्बरमारूढा इति ॥

१०४३—सहसा ते तरु-हरिणा
गिरि-सुभरा लवण-सलिल-बन्धाऽऽरम्भे ॥
तीर-गिरिमारूढा
रामाऽऽगम-रुद्ध-स-भय-रिपु-संचारम् ॥२५॥

एतानि चत्वारि संकीर्णानि ॥

सहसेत्यादि—ते तरुहरिणाः शाखामृगाः गिरिभिः सुभराः सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्वतमारूढाः । अत्र संस्कृतपक्षे संहितायाः अविवक्षितत्वात् तीरगिरिमारूढा इति नोक्तम् । अन्ये आरूढा तीरगिरिमिति विपर्ययमस्य पठन्ति । यदुक्तम् । संस्कृतपक्षे असुभावायत्वं नास्ति । अतो विसर्जनीयस्य सकार एव स्यात् । रामस्य य आगमस्तेन रुद्धः सभयानां रिपूणां शत्रूणां संचारो यत्र तीरगिरौ । राम आगत इति तत्र भयात् संचारं त्यक्तवन्त इति ॥ एतानि चत्वारि संकीर्णानि ॥

१०४४—ततः प्रणीताः कपि-यूथ-मुख्यैर्
न्यस्ताः कृशानोम् तनयेन सम्यक् ॥
अ-कम्प्र-ब्रभ्राऽभ्र-नितम्ब-भागा
महाऽर्णवं भूमि-भृतो ऽवगाढाः ॥ २६ ॥

निराख्यातं निरवद्यं च ॥

तत इत्यादि—ततोऽनन्तरं भूमिभृतः पर्वताः कपियूथमुख्यैर्नीलादिभिः कृशानोस्तनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव कृशानुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवम् अवगाढाः अवष्टब्धवन्तः अंकम्पाः स्थिराः अग्राग्रनितम्बानां भागा येषां ते । बुध्नो मूलम् । 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इत्यधिकृत्य 'बन्धेर्ब्रधिबुधी च' इत्यौणादिको नक् ॥ इदं निराख्यातं तिङन्तपदाभावात् । निरवद्यं च प्राकृताभावात् ॥

> १०४५—तेने ऽद्रि-बन्धो, ववृधे पयोधिस्,
> तुतोष रामो, मुमुदे कपीन्द्रः, ॥
> तत्रास शत्रुर्, ददृशे सुवेलः,
> प्रापे जलान्तो, जहृषुः प्लवङ्गाः. ॥ २७ ॥

एकान्तराख्यातं निरवद्यम् ॥

तेन इत्यादि—अद्रिबन्धस्तेने शनैर्विस्तारं गतः अत एव ववृधे पयोधि-र्वृद्धिं गतः । गिरिभिः पूर्यमाणोदरत्वात् तीरं प्लावयति स्म । तुतोष रामस्तु-ष्टवान् । सुकरमिदानीं शत्रुव्यापादनमिति । मुमुदे कपीन्द्रः हृष्टवान् । प्राप्तो मे प्रत्युपकारकाल इति । तत्रास शत्रुः त्रासमुपगतः सेतुं बद्ध्वानिदानीमा-यातो राम इति । ददृशे सुवेलः ढौकमानैः सर्वैर्दृष्टः । जलान्तश्च प्रापे प्राप्तः । ततो जहृषुः हृष्टाः प्लवङ्गाः स्वाम्यादेशः संपादित इति । एतदेकान्तराख्यातं सुबन्तपदैर्व्यवधानात् । निरवद्यं च प्राकृताभावात् ॥

> १०४६—भ्रेमुर्, ववल्गुर्, ननृतुर्, जजक्षुर्,
> जगुः समुत्पुप्लुविरे, निषेदुः, ॥
> आस्फोटयांचक्रुरभिप्रणेदुर्,
> रेजुर्, ननन्दुर्, विययुः, समीयुः. ॥ २८ ॥

आख्यात-माला ॥

भ्रेमुरित्यादि—ते पारं प्राप्य केचित् प्रदेशदर्शनोत्सुकाः भ्रेमुः भ्रान्ताः । अन्ये ववल्गुः तोषं गतवन्तः । 'उख उखि–' इत्यत्र वल्गतिर्गतौ पठ्यते । केचिदतिहर्षात् ननृतुः । अन्ये रावणपराक्रमान् न्यक्कुर्वन्तो जजक्षुः हसित-वन्तः । बुभुक्षया वा फलानि भक्षितवन्तः । 'जक्ष भक्ष-हसनयोः ।' केचित् जगुः गायन्ति स्म । केचित्समुत्पुप्लुविरे उत्प्लुत्योत्प्लुत्य गच्छन्ति स्म । केचित् श्रान्ता निषेदुः निषण्णाः । केचिदास्फोटयांचक्रुरेवं युध्याम इति आस्फोटं कुर्व-न्तीति ण्यन्ताल्लिट्याम् । केचित्तोषादभिप्रणेदुः सुष्ठु नादितवन्तः । केचिद्रेजुः दीप्तवन्तः । केचिन्ननन्दुरेवमीदृशं कर्म कृतवन्त इति । अन्ये विययुरितस्ततो गच्छन्ति स्म । केचित्समीयुः एकत्र संगताः ॥ आख्यातमालेति तिङन्तमाला ॥

१०४७—गिरि-पङ्क-चारु-देहं
कक्कोल-लवङ्ग-बद्ध-सुरभि-परिमलम् ॥
बहु-बहलोरु-तरङ्गं
परिसरमारूढमुद्धरं लवण-जलम्. ॥ २९ ॥

गिरीत्यादि—गिरीणां प्रक्षिप्यमाणानां यः पङ्कः गैरिकादिधातुकर्दमः तेन चारुदेहम् । कक्कोललवङ्गाभ्यां बद्धः सुरभिः परिमलो गन्धो यस्मिन् । बहवः प्रभूता बहलाः स्थूला उरवः उच्चास्तरङ्गा यस्य तदीदृशं लवणजलम् । उद्धरम् उद्धृतं कर्तृभूतम् । परिसरं तटमारूढं सेतुना निवारितगतित्वात् ॥

१०४८—लोलं कूलाऽभिगमे
खे तुङ्गाऽमल-निबद्ध-पुरु-परिणाहम् ॥
सुर-गङ्गा-भरण-सहं
गिरि-बन्ध-वरेण लवण-सलिलं रुद्धम्. ॥३०॥

लोलमित्यादि—कूलाभिगमने तटगमने लोलं चञ्चलम् । खे आकाशे तुङ्गं च तदमलं चेति तुङ्गामलम् । निबद्धः संयुक्तः पुरुर्महान् परिणाहो यस्य । तुङ्गामलं च तन्निबद्धपुरुपरिणाहं चेति । वियति आरोहपरिणाहाभ्यां युक्तमित्यर्थः । सुरगङ्गायाः मन्दाकिन्याः यद्भरणं पूरणं तत्र सहं शक्तं तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धम् ॥

कुलकम्-।३१-४३।—

१०४९—आरूढं च सुवेलं
तरु-मालाऽऽबन्ध-हारि-गिरि-वर-जालम् ॥
रावण-चित्त-भयङ्कर-
मापिङ्गल-लोल-केसरं राम-बलम् ॥ ३१ ॥

आरूढमित्यादि—रामबलं तटे स्थित्वा आरूढं च सुवेलं पर्वतम् । चकारस्य प्राकृते स्वरशेषता न भवति । पदमध्यान्तयोरवर्तमानत्वात् । तरुमालाया आबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्यन्तगिरीणां जालं यस्य सुवेलस्य । रावणचित्तस्य भयङ्करं रामबलम् । आपिङ्गलानि लोलानि केसराणि यस्य तदिति ॥

१०५०—लङ्काऽऽलय-तुमुलाऽऽरव-
सुभर-गभीरोरु-कुञ्ज-कन्दर-विवरम् ॥
वीणा-रव-रस-सङ्गम-
सुर-गण-संकुल-महा-तमाल-च्छायम् ॥ ३२ ॥

लङ्केत्यादि—लङ्कालयानां राक्षसानां यस्तुमुलो महाबारवः तेन सुभराः परिपूर्णाः गमीरोरुकुञ्जा गम्भीरमहागहनानि कन्दरविवराणि च यत्र सुवेले । वीणारवे यो रसस्तृष्णा तेन सङ्गमः समागमो येषां सुरगणानां ते च सुरगणाश्चेति सः । तैः संकुला व्याप्ता महातमालच्छाया यत्रेति ॥

१०५१—स-रस-बहु-पल्लवाऽऽविल-
केसर-हिन्ताल-बद्ध-बहल-च्छायम् ॥
ऐरावण-मद-परिमल-
गन्धवहाऽऽबद्ध-दन्ति-संरम्भ-रसम् ॥ ३३ ॥

सरसेत्यादि—सरसाः सार्द्राः ये बहवः पल्लवाः तैराविला अन्धकारिता ये केसरवृक्षाः हिन्तालवृक्षाश्च तैर्बद्धा बहला घना छाया यत्र सुवेले । ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे तादृशेन गन्धवहेन बद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति । ऐरावण ऐरावत इत्युभयमपि प्राकृते साधु ॥

१०५२—तुङ्ग-तरु-च्छाया-रुह-
कोमल-हरि-हारि-लोल-पल्लव-जालम् ॥
हरिण-भयंकर-स-कुसुम-
दाव-सम-च्छवि-विलोल-दाडिम-कुञ्जम् ॥३४॥

तुङ्गेत्यादि—तुङ्गतरूणां या छाया तस्यां रोहन्तीति इगुपधलक्षणः कः । तुङ्गतरुच्छायारुहाः विटपाः तेषां कोमलं हरि हरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र । हरिणानां भयंकरा दावसदृशत्वात् सकुसुमदावसमच्छवयः दावाग्नितुल्याः लोलदाडिमकुञ्जा यत्र ॥

१०५३—कल-हरि-कण्ठ-विरावं
सलिल-महा-बन्ध-संकुल-महा-सालम् ॥
चल-किसलय-संबद्धं
मणि-जालं सलिल-कण-मयं-विवहन्तम् ॥३५॥

कलेत्यादि—कलो मनोहरः हरीणां कण्ठविरावो यत्र । सलिलस्य यो महाबन्धस्तेन संकुला महान्तः सालाः सालवृक्षा यत्र । चलकिसलयेषु संबद्धं संलग्नं सलिलकणमयं सलिलकणरूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम् ॥

१०५४—तुङ्ग-मणि-किरण-जालं
गिरि-जल-संघट्ट-बद्ध-गम्भीर-रवम् ॥

